श्रीः ।

श्रीरस्तु ।

श्रीमल्लोकाचार्यप्रसादितम्

# ॥ तत्वत्रय-रहस्यम् ॥



श्रीकाञ्ची प्रतिवादिभयङ्करसिंहासनाधीश्वर

जगद्गुरु-श्रीमदनन्ताचार्यस्वामिभिः

संस्कृतभाषयाऽनूदितम् ।



श्रीकाञ्ची

सुदर्शनमुद्रालये सम्मुद्रय

प्रकाशितम् ।

विभवसंवत्सरे ।

॥ श्रीः ॥

अस्मद्गुरुपरम्पराभ्यो नमः ।

।

विदितमिदमखिलैरपि, यदुल्लङ्घितभगवच्छासनतया तद्भिमना तफलभूतेऽस्मिन् संसारे परिभ्राम्यतां जीवानां तत्त्वज्ञानमन्तरा परम ष्षार्थसिद्धिर्न संघटेतेति । तथा चावश्यसम्पाद्यस्य तत्त्वज्ञानस्य शास्त्र म्यत्वमुपदेशगम्यत्वं चेति द्वयी सरणिः । शास्त्रतस्तस्य संपिपादयि यां "शास्त्रज्ञानं बहुक्लेशं बुद्धेश्चलनकारणं" मित्याद्युक्तरीत्या बहु क्लेशसाध्यत्वावगमाद्दुस्साधता; सोद्वाप्यायाससन्ततीस्साधनसन्नाहेपि अनन्तपारं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः" इत्युक्ते द्दोषतादवस्थ्यम् । अथ तस्योपदेशतस्सम्पिपादयिषायां अनपायता—प्रवधारयन् सर्वशास्त्रसारज्ञो भगवान् लोकाचार्यो गुरुवरः श्रुतिस्मृती हासपुराणादिषु दुरवगाहतया प्रथितान् चिदचिदीश्वरस्वरूपस्वभाव शेषान् पूर्वाचार्यपरम्पराप्राप्तान् सरळमधुरया सरण्या द्राविडभाषानि इसूत्रभरित तत्त्वत्रयाख्यदिव्यग्रन्थमुखेन प्राचिख्यिपदस्माद्दशसंसारिजनो जजीवयिषया ।

तस्यैतस्य तत्त्वत्रयग्रन्थस्य अपरिचितद्राविडभाषाणामप्यास्तिकाना मुक्षूणामनुसन्धाने सौकर्यं सम्पिपादयिषवः श्रीकाञ्चीप्रतिवादिभयङ्कर हासनाधीश्वराः श्रीमन्तो जगद्गुरु -- अनन्तार्यवर्यस्वामिचरणाः क्षामविक्षिपन्त्या सुधारसझरीमधरीकुर्वन्त्या च संस्कृतवाक्सरण्या तमेव स्यग्रन्थं विवर्तयामासुः । स एष दिव्यग्रन्थः प्रकाशितपूर्व मुमुक्षुप्पडि—वचनभूषणादिवदौत्तराणामशेषाणामपि वैष्णवानामत्यन्तोपकारको भवितु तीति तमिमं सम्मुद्रय प्रकाशयन्तो वयं सर्वथापि धन्यभावमनु । सन्तोषाणामुपरि वर्तामह इत्यखिलमवदातम् ।

इति — श्रीजगद्गुरुस्वामिचरणनळिनोपजीवी,

श्रीकाञ्ची. श्रीवैष्णवदासः .

विभववत्सरसिंहमास वैदिकसर्वस्वप्रकाशन

पौर्णमासी । प्रबन्धकर्ता ।

श्रीवैष्णव सम्प्रदाय के प्रसिद्ध आचार्यों में श्रीलोकाचार्यस्वामी: भी एक है। ज्ञान वैराग्य आदि सद्गुणों के कारण ही नही लोकोज्जिज वयिषागुण के कारण भी यह आचार्य प्रशंसित होते हैं। उन के इ गुण का ही यह कार्य है कि उन्हों ने संसारसागरनिमग्न अज्ञजनों सम्यज्ज्ञानलाभ के लिये अष्टादश रहस्य ग्रन्थों की रचना की। उन १८ ग्रन्थों में से यह तत्वत्रय नामक रहस्य ग्रन्थ है।

भिन्नभिन्न मतावलम्बी भिन्न २ प्रकार से मूल तत्वों की गण करते है। श्रीविशिष्टाद्वैत सम्प्रदाय में तीन मूल तत्व माने गये हैं प्रकृति, जीव, और ईश्वर ये तीन मूल तत्व है। इन से अनेक अवान्त तत्वों की उत्पत्ति हुई है। इन्ही तीन मूल तत्वों के स्वरूप लक्षण आ का विवेचन इस ग्रन्थ में किया गया है। अनेक शास्त्रों के सारांश व लेकर यह ग्रन्थ बनाया गया है। इस को पढलेने से तत्वप्रक्रिया व बोध हो जाता है। निरूपण पद्धति अत्यन्त सरल होने के कार साधारणबुद्धिवालों को भी इस के समझने में कठिनाई नहीं होती आचार्य ने द्राविडी–मिश्र संस्कृत भाषा अर्थात मणिप्रवाळ भाषा में इ ग्रन्थ की रचना की है। द्राविड देशीय लोगों को इस ग्रन्थ से महा उपकार हुआ और हो रहा है। अन्य भाषाभाषी श्रीवैष्णवों को भी इ से लाभ ही इस इच्छा से मणिप्रवाळ भाषामय तत्वत्रय ग्रन्थ का संस्कृ भाषा में अनुवाद श्रीकाञ्ची प्रतिवादिभयङ्कर मठाधीश्वर श्रीमद् अनन्ताचा स्वामीजी महाराज ने किया। उस को हम मुद्रित कर प्रकाशित करते और आशा करते है, कि इस से श्रीवैष्णव जनता लाभ उठावेगी।

प्रबन्धकर्ता–वैदिकसर्वस

श्रीकाञ्ची।

श्रीरस्तु ।

श्रीमते रामानुजाय नमः ।

श्रीमल्लोकगुरवे नमः ।

---

श्रीमल्लोकाचार्यप्रणीतम्

# ॥ तत्वत्रय—रहस्यम् ॥

[ श्रीकाञ्ची प्रतिवादिभयङ्करानन्तार्यवर्यप्रणीतः – संस्कृतानुवादः ।]

## चित्प्रकरणम् ।

१. मुमुक्षोश्चेतनस्य मोक्षसिद्धये तत्त्वत्रयज्ञानमावश्यकम् ।

२. तत्त्वत्रयं नाम – चित् अचित् ईश्वरश्च ।

३. 'चित्' इति आत्मोच्यते ।

४. आत्मस्वरूपम् (१) " शेन्नु शेन्नु परम्परमाय् " इत्युक्त प्रकारेण देहेन्द्रियमनःप्राणबुद्धिविलक्षणम् अजडम् आनन्दरूपं नित्यं अणु अव्यक्तम् अचिन्त्यं निरवयवं निर्विकारं ज्ञानाश्रयभूतम् ईश्वरस्य नियाम्यं धार्यं शेषभूतं च ।

५. आत्मस्वरूपस्य देहादिविलक्षणत्वं कथमिति चेत्? इत्थम् -

६. देहादीनाम् " मम देहादयः " इति आत्मनो भिन्नतया भानात्, इदंत्वेन भानात्, आत्मनश्च अहंत्वेन भासमानत्वात्, एतेषां कदाचिद्भासमानत्वात् कदाचिदभानाच्च, आत्मनस्सदा भासमानत्वाच्च, एतेषां बहुत्वात्, आत्मन एकत्वाच्च एतेभ्यो विलक्षणः आत्मेत्यङ्गीकर्तव्यम् ।

---

(१) श्रीशठकोपश्रीमुखसूक्तौ अष्टमशतके अष्टमदशके पञ्चमी गाथा - उत्तरोत्तरसुत्कृष्टदेहादिभ्योपि चोत्तमात् । प्राणादितोपि चोत्कृष्ट स्वरूप प्राहुरात्मनः ॥

७. एतासां युक्तीनां बाधसम्भवेपि शास्त्रबलेन आत्मा देहादि विलक्षणस्सिद्ध्यति ।

८. अजडत्वं नाम – ज्ञानमन्तरापि स्वतो भासमानत्वम् ।

९. आनन्दरूपत्वं च सुखरूपत्वम् ।

१०. सुप्तोत्थितस्य " सुखमहमस्वाप्स " मिति परामर्शदर्शनात् सुखरूप आत्मा भवति ।

११. नित्यत्वं नाम – सदा वर्तमानत्वम् ।

१२. सदा वर्तते चेत् जन्ममरणे कथं भवत इति चेत् ; देहसम्बन्धो जन्म ; देहवियोगो मरणम् ।

१३. अणुत्वं कथमिति चेत् !

१४. हृदयप्रदेशादुत्क्रामति गच्छत्यागच्छति चेति शास्त्रे प्रति पादनात् अणुरात्मा भवति ।

१५. अणुर्भूत्वा हृदयप्रदेशमात्रे तिष्ठति चेत् , सर्वत्र शरीरे सुखं दुःखं च कथमविशेषेणानुभवतीति चेत् ?

१६. मणिद्युमणिदीपादीनां क्वचिदवस्थानेपि प्रभायास्सर्वत्रैकरूपेण व्याप्तिवत् ज्ञानस्य सर्वत्रैकरूपेण व्याप्त्या तदनुभवो न विरुद्ध्यते ।

१७. एकस्यैककालेऽनेकदेहपरिग्रहोपि ज्ञानव्याप्त्या ।

१८. अव्यक्तत्वं नाम घटपटादिग्राहकैश्चक्षुरादिभिरव्यङ्ग्यत्वम् ।

१९. अचिन्त्यत्वं नाम – अचित्सजातीयतया चिन्तनानर्हत्वम् ।

२०. निरवयवत्वम् – अवयवसमुदायरहितत्वम् ।

२१. निर्विकारत्वम् - अचिद्वद्विकाररहिततया सदैकरूपत्वम् ।

२२. एवंरूपतया शस्त्राग्निजलवातातपादिभिश्छेदनदहनक्लेदनशोषणादि करणायोग्यम् ।

३. आर्हता आत्मानं देहपरिमाणमाहुः ।

४. तत् श्रुतिविरुद्धम् ।

५. अनेकदेहपरिग्रहं कुर्वतां योगिनां स्वरूपस्य शैथिल्यं च प्रसज्येत ।

६. ज्ञानाश्रयत्वं नाम- ज्ञानाधारत्वम् ।

७,२८. आत्मा ज्ञानाधारो यदि न स्यात्, ज्ञानमात्रमेव च स्यात्, तदा 'ज्ञानमह'मिति वक्तव्यं स्यान्न तु जानाम्यहमिति ।

९. ज्ञातेत्युक्त्यैव कर्ता भोक्ता चेत्युक्तं भवति ।

०. कर्तृत्वभोक्तृत्वयोर्ज्ञानावस्थाविशेषत्वात् ।

१. केचित्तु गुणानामेव कर्तृत्वं नात्मन इत्याहुः —;

२. (तन्न;) तथा सति अस्य शास्त्रवश्यत्वं भोक्तृत्वं च व्याहन्येत ।

३. सांसारिकप्रवृत्तिषु कर्तृत्वं न स्वरूपप्रयुक्तम् ।

४. गुणसंसर्गकृतम् ।

५. कर्तृत्वं चेश्वराधीनम् ।

६. ज्ञानाश्रयत्वे, शास्त्रेषु ज्ञानमिति निर्देशोऽस्य कुत इति चेत्;

७. ज्ञाननैरपेक्ष्येणापि स्वयमवभासत इति, ज्ञानं सारभूतगुणतया निरूपकधर्मो भवतीति च तथा निर्देशः ।

८. नियाम्यत्वं नाम — ईश्वरबुद्ध्यधीनसर्वव्यापारवत्त्वम् ।

९. धार्यत्वं नाम — तत्स्वरूपसङ्कल्पव्यतिरेकानियतस्वसत्ताव्यतिरेकवत्त्वम् ।

०. शेषत्वं नाम — चन्दनकुसुमताम्बूलादिवत्तस्य यथेष्टविनियोगार्हत्वम् ।

४१. इदं चात्मवस्तु, गृहक्षेत्रपुत्रकळत्रादिवत् पृथक्सिद्ध्यादियोग्यं न भवति ; किन्तु शरीरवत्तदयोग्यम् ।

४२. आत्मस्वरूपं च बद्धमुक्तनित्यभेदेन त्रिविधम् ।

४३. संसारिणो बद्धा इत्युच्यन्ते ।

४४. उच्छिन्नसंसारबन्धा मुक्ता इत्युच्यन्ते ।

४५. कदाप्यनाघ्रातसंसाराः शेषशेषाशनादयो नित्या इत्युच्यन्ते ।

४६. जलस्याग्निसंसृष्टस्थालीसंसर्गेण औष्ण्यशब्दाद्युत्पत्तिवत् आत्मनोप्यचित्सम्बन्धेनाऽविद्याकर्मवासनारुच्युत्पत्तिर्भवति ।

४७. अचिदपगमे अविद्यादयोऽपगच्छन्तीत्याहुः ।

४८. त्रिविधं चैतदात्मस्वरूपं पृथक्पृथगनन्तम् ।

४९. एक एवात्मा, न बहव इति केचित् ।

५०. तथा सति कस्मिंश्चित्सुखमनुभवति तदानीमेवान्यस्य दुःखानुभवो नोपपद्येत ।

५१. देहभेदात्तदिति चेत् ;

५२. सौभरिशरीरेप्येवं स्यात् ।

५३. कस्यचित्संसरणं, कस्यचिन्मुक्तिः, कस्यचिच्छिष्यत्वं कस्यचिदाचार्यत्वं च न संघटेत ।

५४. विषमसृष्टिरपि नोपपद्येत ।

५५. आत्मभेदप्रतिपादकश्रुतिविरोधश्च ।

५६. श्रुतिरौपाधिकभेदं प्रतिपादयतीति चेन्न—;

५७. मोक्षदशायामपि भेदसद्भावात् ।

५८,५९. तदा देवमनुष्यादिभेदानां कामक्रोधादिभेदानां च नाशे सा आत्मस्वरूपाणामत्यन्तसमतया केनापि प्रकारेण भेदप्रतिपादन

सम्भवेपि, परिमाणेन भारेणाकारेण च समानां स्वर्णकुम्भानां रत्नानां व्रीह्यादीनां च परस्परभेदवत्स्वरूपभेदोऽपि सिद्धः ।

६०. तस्मादात्मभेदोऽङ्गीकार्यः ।

६१. शेषत्वे सति ज्ञातृत्वमात्मनां लक्षणम् ।

६२. एतेषां ज्ञानमपि स्वरूपवन्नित्यं द्रव्यरूपमजडमानन्दरूपं च ।

६३. तर्हि स्वरूपस्य ज्ञानस्य च को भेद इति चेत्;

६४- स्वरूपं धर्मि, सङ्कोचविकासायोग्यं, स्वेतरप्रकाशनासमर्थं, स्वस्मै स्वयं प्रकाशमानमणुपरिमाणं च भवति; ज्ञानं तु धर्मभूतं सङ्कोचविकासयोग्यं स्वेतरवस्तुप्रकाशकं स्वस्मै स्वयमप्रकाशमानम् आत्मनः प्रकाशमानं विभु च भवति ।

६५. तत्र केषाञ्चिज्ज्ञानं सर्वदा विभु; केषाञ्चिच्च सर्वदाप्यविभु; केषाञ्चित्तु कदाचिद्विभु कदाचिदविभु च ।

६६. ज्ञानस्य नित्यत्वे 'ज्ञानं मे जातं नष्ट' मिति व्यवहारः कथमिति चेत्;

६७. इन्द्रियद्वारा बहिर्निस्सृत्य विषयग्रहणेन, परावृत्तया च तथा व्यवहरणमव्याहतम् ।

६८. अस्यैकत्वेपि नानात्वेन भानं प्रसरणभेदमूलकम् ।

६९. ज्ञानस्य द्रव्यत्वं कथमिति चेत्;

७०. क्रियागुणयोराश्रयत्वादजडत्वाच्च ।

७१. अजडत्वे सुषुप्तिमूर्च्छादिष्वपि कुतो न प्रकाशत इति चेत्;

७२. प्रसरणाभावान्न प्रकाशते ।

७३. आनन्दरूपत्वं च ज्ञानस्य प्रकाशकालेऽनुकूलत्वम् ।

४. विषशस्त्रादिप्रदर्शनकाले तद्विषयकज्ञानस्य दुःखरूपत्वे कारणं देहात्मभ्रमादयः ।

५. ईश्वरात्मकतया सर्वेषामपि पदार्थानामानुकूल्यमेव स्वभावः, प्रातिकूल्यं त्वागन्तुकम् ।

६. (चन्दनकुसुमादि) वस्त्वन्तरनिष्ठस्याप्यानुकूल्यस्य स्वाभाविकत्वे, कस्यचित्कदाचित्कुत्रचिदनुकूलानां चन्दनकुसुमादीनां देशान्तरे कालान्तरे च तं प्रत्येव, तद्देशे तत्काले चान्यं प्रति च प्रतिकूलता न स्यात् ।

इति तत्त्वत्रये चित्प्रकरणं समाप्तम् ।



॥ श्रीः ॥

## अथ अचित्प्रकरणम् ।

अचित् – ज्ञानशून्यं विकारास्पदं च ।

इदं च शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्यं चेति त्रिविधम् ।

तत्र शुद्धसत्त्वं नाम – रजस्तमोऽमिश्रकेवलसत्त्वरूपं, नित्यं ज्ञानानन्दजनकं, कर्माप्रयोज्यकेवलभगवदिच्छया विमानगोपुर मण्डपप्रासादादिरूपेण परिणमत्, निरवधिकतेजोरूपं, नित्यम्, मुक्तैरीश्वरेणापि च परिच्छेत्तुमशक्यम् अत्यद्भुतं किमपि वस्तु ।

इदं केचिज्जडमाहुः, केचिदजडम् ।

अजडत्वपक्षे नित्यानां मुक्तानामीश्वरस्य च ज्ञाननैरपेक्ष्येण स्वयं प्रकाशते ।

संसारिणां तु न प्रकाशते ।

७. आत्मनो ज्ञानाच्चास्य भेदः कुत इति चेत्?

८. अहमित्यभानात् शरीराकारेण परिणामात् विषयनिरपेक्षतया स्वत एव भासमानत्वात् शब्दस्पर्शाद्याश्रयत्वाच्च भिन्नत्वमभ्युपेयम्।

९. मिश्रसत्त्वं नाम— सत्वरजस्तमोरूपगुणत्रययुक्तः, बद्धचेतनानां ज्ञानानन्दयोस्तिरोधायकः, विपरीतज्ञानजनकः, नित्यः, ईश्वरस्य क्रीडापरिकरभूतः, प्रदेशभेदेन कालभेदेन च सदृशानां विसदृशानां च विकाराणामुत्पादकः, प्रकृतिरविद्या मायेत्यभिधीयमानः कश्चिदचिद्विशेषः ।

०. विकाराणां जनकत्वात्प्रकृतिरित्यभिधीयते; ज्ञानविरोधित्वादविद्येति निगद्यते; विचित्रसृष्टिकारकत्वान्मायेत्युच्यते ।

१. अयं चाऽचिद्विशेषः १. " पोङ्कैम्बुलनुम् पोरियैन्दुम् करुमेन्दिरियमैम्बूदम्, इङ्गिव्वुयिरेय् पिराकिरुदि मानाङ्गारमनङ्गळ् " इत्युक्तप्रकारेण चतुर्विंशतितत्त्वात्मकः ।

२. तेषु प्रथमं तत्त्वं प्रकृतिः ।

३. इयं च अविभक्ततम इति विभक्ततम इति अक्षरमिति च कतिपयावस्थावती ।

४. गुणवैषम्येन महदादिविकारा अस्या उत्पद्यन्ते ।

५. सत्वरजस्तमांसि गुणाः ।

---

१. श्रीशठकोपश्रीमुखसूक्तौ दशमशतके सप्तमदशके दशमी गाथा - शब्दाद्या विषयाः पञ्च पञ्च ज्ञानेन्द्रियाणि च । कर्मेन्द्रियाणि च तथा भूतानां चैव पञ्चकम् ॥ अत्र जीवात्मसंसृष्टा प्रकृतिश्च महांस्तथा । अहङ्कारो मनश्चेति [ चतुर्विंशतिकं स्मृतम् । ] ॥

१६. एते च प्रकृतेस्स्वरूपानुबन्धिस्वभावभूताः, प्रकृत्यवस्थायाम
भूताः, विकारदशायामुद्भूताश्च भवन्ति ।

१७. सत्वं ज्ञानमुखे तत्सङ्गं चोत्पादयति ।

१८. रजः रागतृष्णासङ्गान् कर्मसङ्गं चोत्पादयति ।

१९. तमस्तु विपरीतज्ञानमनवधानमालस्यं निद्रां च जनयति ।

२०. एतेषां समत्वे विकारास्समा अस्पष्टाश्च भवन्ति; विषम
तु ते विषमास्स्पष्टाश्च भवन्ति ।

२१. विषमविकारेषु प्रथमो महान् ।

२२. अयं च सात्विको राजसस्तामसश्चेति त्रिविधः अध्यवर
जनकश्च ।

२३. अस्मात् ,वैकारिकतैजसभूतादिभेदेन त्रिविधोऽहङ्कार उत्पद्य

२४. अहङ्कारोऽभिमानहेतुः ।

२५. एषु वैकारिकात् श्रोत्रत्वक्चक्षुर्जिह्वाघ्रणाख्यानि पञ्च ज्ञाने
याणि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि,
इत्येकादशेन्द्रियाण्युत्पद्यन्ते ।

२६. भूतादेश्शब्दतन्मात्रमुत्पद्यते; तस्मादाकाशः स्पर्शतन्मात्रं
त्पद्यते । ततो वायू रूपतन्मात्रं चोत्पद्यते । ततस्तेजो
तन्मात्रं चोत्पद्यते । तत आपो गन्धतन्मात्रं चोत्पद्यन्
ततश्च पृथिव्युत्पद्यते ।

२७. स्पर्शतन्मात्रप्रभृतीनि चत्वारि तन्मात्राणि आकाशादिभू
ष्टयकार्यभूतानि वाय्वादिभूतचतुष्टयकारणभूतानि चेत्यप्य

२८. तन्मात्राणि नाम भूतानां सूक्ष्मावस्थाः ।

२९. राजसाहङ्कारस्त्वन्ययोर्द्वयोरहङ्कारयोः स्वस्वकार्योत्पादनसम
कारी भवति ।

३०. सात्त्विकाहङ्कारः क्रमेण शब्दतन्मात्रादीनां सहकारेण श्रोत्रादिज्ञानेन्द्रियाणि वागादिकर्मेन्द्रियाणि च सृजति । तत्सहकारं विनैव च मनस्सृजतीत्यप्याहुः ।

३१. केचित्तु कानिचिदिन्द्रियाणि भूतकार्याण्याहुः ।

३२. तत्तु शास्त्रविरुद्धम् ।

३३. भूतानि केवलमाप्यायकानि ।

३४. एतेषां संहतिं विना कार्यकरत्वाभावात् मृत्तिकावालुकाजलानि सम्मेळ्य एकद्रव्यतामापाद्य तेन भित्तिनिर्माणवत् एतानीश्वर एकीकृत्य अण्डतामापाद्य तदन्तश्चतुर्मुखं सृजति ।

३५. अण्डमण्डकारणानि च स्वयमुत्पादयति ; अण्डान्तर्गतानि वस्तूनि चेतनान्तर्यामी भूत्वा सृजति ।

३६. अण्डानि चानेकानि चतुर्दशलोकयुतान्युत्तरोत्तरं दशगुणैस्सप्तभिरावरणैरावृतानि ईश्वरस्य क्रीडाकन्दुकस्थानीयानि जलबुद्बुदवद्युगपत्सृष्टानि च भवन्ति ।

३७. भूतेषु मध्ये आकाशोऽवकाशहेतुः, तेजः पचनादिहेतुः, जलं सेचनपिण्डीकरणादिहेतुः, पृथिवी धारणादिहेतुरित्याहुः ।

३८. श्रोत्रादीनां पञ्चानां ज्ञानेन्द्रियाणां क्रमेण शब्दादिपञ्चकग्रहणं कृत्यम्, वागादीनां पञ्चानां कर्मेन्द्रियाणां विसर्गशिल्पगत्युक्तयः कृत्यानि, मनस्तु सर्वेषामेषां साधारणम् ।

३९. आकाशादीनां भूतानां क्रमेण शब्दादयो गुणा भवन्ति ।

४०. गुणविनिमयः पञ्चीकरणेन ।

४१. आकाशस्य कृष्णतया भानमपि तत्प्रयुक्तम् ।

४२. पूर्वपूर्वतन्मात्रसाहाय्येनोत्तरोत्तरतन्मात्राणि स्वविशेषानुत्पादयन्तीति गुणाधिक्यमभवदित्यपि वदन्ति ।

४३. सत्त्वशून्यं नाम कालः ।

४४. इदं च प्रकृतिप्राकृतपरिणामहेतुभूतं कलाकाष्ठादिरूपेण परिणामार्हं, नित्यम्, ईश्वरस्य क्रीडापरिकरभूतं, शरीरभूतं च ।

४५. एतदन्यदुभयविधमप्यचित् ईश्वरस्यात्मनश्च भोग्यभोगोपकरण भोगस्थानभूतम् ।

४६. भोग्यानि - विषयाः, भोगोपकरणानि - चक्षुरादिकरणानि, भोग स्थानानि - चतुर्दश भुवनानि सर्वे च देहाः ।

४७. एतेषु प्राथमिकमचित्तत्वमधस्तनेनावधिना युक्तं, परितस्तने नोपरितनेन चावधिना विरहितम्; मध्यममचित्तत्त्वं परित स्तनेनाऽधस्तनेनं चावधिना रहितमूर्ध्वावधिना युक्तं च। काल स्सर्वत्रैकरूपो वर्तते ।

४८. कालः परमपदे नित्यः, अत्रानित्य इत्यप्याहुः ।

४९. केचित्तु नास्त्येव काल इत्याहुः ।

५०. प्रत्यक्षेणागमेन च तत्सिद्धेर्नैवं वक्तुं शक्यते ।

५१. दिङ्नामकमतिरिक्तं द्रव्यमस्तीति बहव आहुः ।

५२. बहुभिर्हेतुभिराकाशादिष्वन्तर्भावसिद्धेर्नैतदपि युज्यते ।

५३. आवरणाभाव एव आकाश इति केचिदाहुः ।

५४. भावतया प्रतीयमानत्वान्न तदपि युक्तम् ।

५५. अन्ये च केचिदाकाशमेनं नित्यं निरवयवं विभुमप्रत्यक्षं चाहुः ।

५६. भूतादेरुत्पत्त्या अहङ्कारादिष्वभावात् चक्षुषो विषयत्वाच्च न तच्चतुष्टयं युक्तम् ।

५७. वायुरप्रत्यक्ष इत्यप्ययुक्तम् - त्वगिन्द्रियेण गृह्यमाणत्वात् ।

५८. तेजश्च भौमादिभेदेन बहुविधम् ।

५९. तेष्वादित्यादितेजांसि स्थिराणि, दीपादितेजांस्यस्थिराणि ।

६०. तेजसो रूपं रक्तम्, उष्णस्स्पर्शः ।

६१. जलस्य रूपं शुक्लम्, शीतस्स्पर्शः, मधुरश्च रसः ।

६२. पृथिव्या वर्णा रसाश्च बहुविधाः ।

६३. स्पर्शस्त्वस्या वायोश्चानुष्णाशीतः ।

६४. एवमचित्त्रिविधं भवति ।

इति तत्वत्रये अचित्प्रकरणं समाप्तम् ।

## अथ ईश्वरप्रकरणम् ।

१. ईश्वरः - अखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपः, ज्ञानशक्त्यादिकल्याणगुणगणभूषितः, सकलजगत्सर्गस्थितिसंहारकर्ता "आर्तो जिज्ञासुरर्थार्थी ज्ञानी" त्युक्तचतुर्विधपुरुषाणामप्याश्रयणीयः, धर्मार्थकाममोक्षाख्यचतुर्विधफलप्रदः, विलक्षणविग्रहयुक्तः, लक्ष्मीभूमिनीळानायकश्च ।

२. अखिलहेयप्रत्यनीकत्वं नाम - तमःप्रतिभटत्वमिव तेजसः, सर्पप्रतिभटत्वमिव च गरुडस्य विकारादिदोषाणां प्रतिभटत्वम् ।

३. अनन्तत्वं नाम - नित्यत्वे सति चेतनाचेतनव्यापकत्वे सत्यन्तर्यामित्वम् ।

४. अन्तर्यामित्वे सति किं दोषा न प्रसज्येरन्निति चेत्; यथा शरीरगता बाल्यादिदोषा जीवात्मनि न प्रसज्यन्ते, तथा त्रिविधचेतनाचेतनदोषा ईश्वरे न प्रसज्यन्ते ।

५. ज्ञानानन्दैकस्वरूपत्वं नाम - आनन्दरूपज्ञानात्मकत्वम् । तच्च कात्स्न्र्येनानुकूलत्वे सति स्वयंप्रकाशत्वम् ।

६. अस्य ज्ञानशक्त्यादिकल्याणगुणा नित्या अनवधिका असंख्या निरुपाधिका निर्दोषास्समानाधिकरहिताश्च ।

७. एषु वात्सल्यादीनां विषया अनुकूलाः; शौर्यादीनां विषयाः प्रतिकूलाः । एतत्कारणभूतज्ञानशक्त्यादीनां तु सर्वेपि विषयभूताः ।

८. ज्ञानमज्ञानामुपयुक्तम्; शक्तिरशक्तानाम्; क्षमा सापराधानाम्; कृपा दुःखिनाम्, वात्सल्यं सदोषाणाम्; शीलं मन्दानाम्,

आर्जवं कुटिलानाम्, सौहार्दं दुष्टहृदयानाम्, मार्दवं विश्लेषभीरूणाम्, सौलभ्यं दर्शनोत्सुकानाम् ।

९. एवमन्यान्यगुणोपयोगस्थलानि द्रष्टव्यानि ।

१०. इत्थमीश्वरः कल्याणगुणविशिष्टतया अन्येषां दुःखदर्शने सति 'हा! कष्ट' मित्यनुक्रोशन् सर्वदाऽप्येकरूपेण तेषां शुभं चिन्तयन्, केवलं स्वार्थस्स्वपरोभयमर्थश्च नभवन् चन्द्रिकामारुतचन्दनजलवत्पारार्थ्यैकवेषस्सन् स्वाश्रितानां जन्मज्ञानवृत्तप्रयुक्तं निकर्षमपश्यन्, तेषां सर्वथाप्यशरण्यत्वदशायां स्वयं शरण्यो भवन्, सान्दीपिनिपुत्रस्य वैदिकपुत्राणां च प्रत्यानयनवदशक्यानि कार्याणि कृत्वापि तदपेक्षितानि पूरयन्, तदर्थं ध्रुवपदवदपूर्वाणि च वस्तून्युत्पादयन्, आत्मानमात्मीयं च ते यथा निजं निजं स्वमेवोपयुञ्ज्महे इति भावयेयु स्तथा तेभ्यः प्रदाय तेषां कार्यसम्पादनेन स्वयं कृतकृत्यो भवन्, स्वकृतं किमप्यस्मरन् तत्कृतसुकृतलवमेव च मनसि कलयन्, अनादेः कालाद्दृढमूलवासनावासितानपि रसांस्ते यथा विस्मरेयुस्तथा तद्भोग्यभूतः, भार्यापुत्रादीनां दोषेषु दृष्टेष्वप्यजानन्निव वर्तमानः पुरुष इव तेषामपराधमनमाप्यस्मरन्, प्रधानमहिष्या (श्रिया देव्या) प्रदर्शितेष्वप्यपराधेषु स्वयं तस्याः प्रतिपक्षीभूय निश्चलो रक्षन्, कामिनीशरीरमलप्रणयी कामुक इव तेषां दोषान् भोग्यतयाऽङ्गीकृत्य तेषां विषये करणत्रयेणाप्यनुकूलः, वियोगे सति तदीयः क्लेशः क्षुरमात्र इति यथोच्येत तथा स्वयं क्लिश्यमानः तदानुकूल्याय स्वात्मानं निचीकुर्वन्, तेषां बन्धनताडनादियोग्यस्सुलभो भवन्, सद्यः प्रसूते वत्से स्नेहेन- पूर्वप्रसूतं वत्सं यवसप्रदानार्थमा

गतांश्च शृङ्गाभ्यां खुरैश्च प्रहरन्ती धेनुरिव श्रियं देवीं सूरींश्चोपेक्ष्य तेषु खिद्यन् वर्तते ।

११. अयमेव सर्वस्य जगतः कारणम् ।

१२. केचित्परमाणून् कारणमाहुः, परमाणुसद्भावे प्रमाणाभावात् श्रुतिविरोधाच्च तदयुक्तम् ।

१३. कापिलास्तु प्रधानं कारणमाहुः, प्रधानस्याचेतनत्वादीश्वराधिष्ठानाभावे परिणामासम्भवात् सृष्टिसंहारव्यवस्थाऽसम्भवाच्च तदप्ययुक्तम् ।

१४, कर्मपरतन्त्रतया दुःखितया च चेतनोपि न कारणं भवितुमर्हति ।

१५. तस्मादीश्वर एव जगतः कारणम् ।

१६. अस्य च कारणत्वं नाऽविद्याकर्मपरानियोगादिहेतुकम्, अपितु स्वेच्छाप्रयुक्तम् ।

१७. सङ्कल्पमात्रेण करणाज्जगत्सृष्टिर्नायासाय भवति ।

१८. अस्याः प्रयोजनं लीलैव केवलम् ।

१९. तर्हि संहारदशायां लीलाया भङ्गस्स्यादिति चेन्न, संहारस्यापि लीलात्वात् ।

२०. स्वयमेव जगद्रूपेण परिणमनादयमुपादानकारणमपि भवति ।

२१. तर्हि निर्विकारत्वोक्तिः कथमिति चेत्, स्वरूपस्य विकाररहितत्वात् ।

२२. तर्हि कथं परिणामो भवतीति चेत्, विशिष्टविशेषणसद्वारकतया ।

२३. न खलु कस्यचिदूर्णनाभेर्यस्स्वभावः स सर्वशक्तेर्न सम्भवति ।

२४. ईश्वरेण क्रियमाणा सृष्टिर्नाम - अचितः परिणामनम्, चेतनस्य शरीरेन्द्रियप्रदानपुरस्सरं ज्ञानस्य विकासनं च ।

२५. स्थितिकरणं च - सस्यानां जलाधारवत् सृष्टेषु वस्तुष्वनुप्रविश्य स्थित्वा सर्वविधरक्षाकरणम् ।

२६. संहरणं नाम - अविनीतस्य पुत्रस्य पित्रा क्रियमाणं निगळबन्धनमिव विषयान्तरेष्वतिप्रसक्तानां करणानां भञ्जनम् ।

२७. सृष्ट्यादित्रयमिदं प्रत्येकं चतुर्विधम् ।

२८. सृष्टौ ( प्रसक्तायां ) ब्रह्मणः प्रजापतीनां कालस्य सकलजन्तूनां चान्तर्यामी सन् रजोगुणयुक्तस्सृजति ।

२९. स्थितौ ( प्रसक्तायां ) विष्ण्वादिरूपेणावतीर्य , मन्वादिरूपेण शास्त्राणि प्रवर्त्य सन्मार्गं प्रदर्श्य , कालस्य सर्वेषां च भूतानामन्तर्यामी सन् सत्त्वगुणयुक्तः स्थापयति ।

३०. संहारे ( प्रसक्ते ) रुद्रस्य अग्नयन्तकादीनां कालस्य सकलभूतानां चान्तर्यामी सन् तमोगुणयुक्तस्संहरति ।

३१. कांश्चित्सुखिनः कांश्चिद्दुःखिनश्च सृजत ईश्वरस्य वैषम्यनैर्घृण्ये प्रसज्येयातामिति चेन्न , कर्मणा हेतुना तथा करणात् ,मृद्भक्षकशिशुशिक्षकमातृन्यायेन हितपरतया करणाच्च । ( माता हि मृदं भक्षयन्तं शिशुं जिह्वायां क्षतकरणेन भीषयति । )

३२. अयं च "(१) मुन्नीर्ञालम्पडैत्तवेम्मुहिल्वण्णन् " इत्युक्तप्रकारेण विग्रहविशिष्टस्सन् सृष्ट्यादिकं करोति ।

३३. विग्रहश्च – स्वरूपाद्गुणेभ्यश्चात्यन्ताभिमतः , स्वानुरूपः , नित्यः , एकरूपः , शुद्धसत्त्वात्मकः , चेतनदेहवत् ज्ञानमयस्य स्वरूपस्याच्छादनमकुर्वन् माणिक्यमयकरण्डकं स्वान्तर्निहितस्य कार्तस्वरस्येव स्वर्णच्छायस्य दिव्यात्मस्वरूपस्य प्रकाशकः , निरवधिकतेजोरूपः , सौकुमार्यादिकल्याणगुणगणनिधिः , योगिध्येयः , सकलजनमोहनः , समस्तभोगवैराग्यजनकः , नित्यमुक्तानुभाव्यः ,

---

१. श्रीशठकोपश्रीसुखसूक्तौ तृतीयशतके द्वितीयदशकस्य प्रथमा गाथा- अम्भोधिसंवृतमहीतलसर्गकारिन् अस्मत्प्रभो जलदसन्निभादिव्यगात्र ॥

उत्फुल्लपङ्कजसुगन्धिमहातटाकवत्सकलतापहरः, अनन्तावतार कन्दभूतः, सर्वरक्षकः, सर्वाश्रयभूतः, अस्त्रभूषणभूषितश्च ।

३४. ईश्वरस्वरूपं च परव्यूहविभवान्तर्याम्यर्चावतारभेदेन पञ्चविधम् ।

३५. तत्र परत्वं नाम— अकालकाल्येऽनन्तानन्दमये देशविशेषे नित्यमुक्तभोग्यतयाऽवस्थानम् ।

३६. व्यूहो नाम— सृष्टिस्थितिसंहारार्थं संसारिसंरक्षणार्थं उपासकानुग्रहार्थं च सङ्कर्षणप्रद्युम्नानिरुद्धरूपेणावस्थानम् ।

३७ परस्वरूपे ज्ञानादयष्षडपि गुणाः पूर्त्या प्रकाशन्ते; व्यूहेषु प्रत्येकं द्वौ द्वौ गुणौ प्रकाशेते ।

३८ तत्र सङ्कर्षणो ज्ञानबलाभ्यां युक्तो जीवतत्वमधिष्ठाय, तच्च प्रकृतेर्विविच्य, प्रद्युम्नावस्थां च प्राप्य शास्त्रप्रवर्तनं जगत्संहारं च करोति। प्रद्युम्नश्चैश्वर्यवीर्याभ्यां युक्तो मनस्तत्वमधिष्ठाय धर्मोपदेशं मनुचतुष्टयादिशुद्धवर्गसृष्टिं च करोति । अनिरुद्धस्तु शक्तितेजोभ्यां युक्तो रक्षणे तत्वज्ञानप्रदाने कालसृष्टौ मिश्रसृष्टौ चाधिकृतो भवति ।

३९. विभवाश्चानन्ता गौणमुख्यभेदेन द्विविधाश्च ।

४०. मनुष्यत्वतिर्यक्त्वस्थावरत्ववत् गौणत्वमपीच्छाकृतं, न स्वरूपतः ।

४१. तेष्वप्राकृतविग्रहाः अजहत्स्वभावविभवाः दीपोत्पन्नप्रदीपतुल्या मुख्यप्रादुर्भावास्सर्वेऽपि मुमुक्षूणामुपास्याः ।

४२. विधिशिवपावकव्यासजामदग्न्यार्जुनवित्तेशादयो गौणप्रादुर्भावास्सर्वेऽप्यहङ्कारयुक्तजीवाधिष्ठानान्मुमुक्षूणामनुपास्याः ।

४३. नित्योदितशान्तोदितादिभेदाः, जाग्रत्संज्ञादिचातुरात्म्यम्, केशवादिमूर्त्यन्तराणि, षट्त्रिंशद्भेदभिन्नाः पद्मनाभादिविभवाः, उपेन्द्रात्रिविक्रमदधिभक्तहयग्रीवनरनारायणहरिकृष्णमत्स्यकूर्मवराहाद्यवतारविशेषाः, तदीयभुजायुधवर्णकृत्यस्थानादिभेदाश्च दुरवधरतया गुह्यतमतया चात्र नोच्यन्ते ।

४४. अवताराणां हेतुरिच्छा; फलं साधुपरित्राणादित्रयम् ।

४५. बहुषु प्रमाणेषु भृगुशापादिभिरजायतेत्युक्त्याऽवताराणां हेतुः कर्म न भवेत्किमिति चेत्, शापो व्याजमात्रम्, अवतारस्त्वैच्छ एवेति तत्रैव समाहितम् ।

४६. अन्तर्यामित्वं नाम—अन्तः प्रविश्य नियन्तृत्वम्, स्वर्गनरक प्रवेशाद्यवस्थास्वपि सर्वेषां चेतनानां सहायीभूय तदपरित्यागेना वस्थानम्; अथ च शुभाश्रयभूतदिव्यविग्रहविशिष्टतया तेषां ध्येयत्वार्थं तेषां रक्षणार्थं च बन्धूभूय हृदयकमलेऽवस्थानं च ।

४७. अर्चावतारो नाम—१ "तमरुहन्ददेव्वुरुत्रम्" इत्युक्त प्रकारेण चेतनाभिमतद्रव्यविशेषे विभवविशेषवद्देशकालाधिकारिनि यममन्तरैव सन्निधाय, अपराधानिरीक्षितकेनार्चकपरतन्त्रसमस्त व्यापारविशिष्टतया आलयेषु गृहेषु चावस्थानम् ।

४८. रुचिजनकत्वं शुभाश्रयत्वं अशेषलोकशरण्यत्वमनुभाव्यत्वं चेति सर्वमर्चावतारे परिपूर्णम् ।

४९. स्वस्वामिभावविपर्यासेनाज्ञवदशक्तवदस्वतन्त्रवच्च वर्तमानोपि अपारकारुण्यपरवशस्सन् सर्वापेक्षितानि ददाति ।

इति तत्वत्रये—ईश्वरप्रकरणं समाप्तम् ।

समाप्तं च तत्वत्रयरहस्यम् ।

श्रीमते लोकगुरवे नमः ।

श्रीमद्वरवरमुनये नमः ।



इति श्रीकाञ्चीप्रतिवादिभयङ्करमठाधीश्वर-
जगद्गुरुश्रीमदनन्तदेशिकैरनुगृहीतः
तत्वत्रयसंस्कृतानुवादस्समाप्तः ।



---

१ प्रथमश्रीमदन्तादिप्रबन्धे–भक्ताः काङ्क्षन्ति यद्रूपं तन्मयो भवतीश्वरः ।